॥ श्रीराम ॥

ब्रम्हा मुरारिस्त्रिपुरांतकारि भानुः शशी भूमिसुतो बुधश्च। गुरुश्च शुक्रः
शनिराहुकेतवः कुर्वंतु सर्वे मम सुप्रभातम् ॥ १ ॥ भृगुर्वसिष्ठः क्रतुरंगिराः
-श्च मनुः पुलस्त्यः पुलहश्च गौतमः। रैभ्यो मरीचिश्च्यवनश्च दक्षः कुर्वंतु
० ॥ २ ॥ सनत्कुमारः सनकः सनंदनः सनातनोप्यासुरि पिंगलौ च। सप्तस्वराः
सप्त रसातलानि कुर्वंतु ० ॥ ३ ॥ सप्तार्णवाः सप्तकुलाचलाश्च सप्तर्षयो
द्वीपवनानि सप्त। भूरादिकृत्वा भुवनानि सप्त कुर्वंतु ० ॥ ४ ॥ पृथ्वी सगंधा
सरसास्तथापः स्पर्शी च वायुर्ज्वलितं च तेजः। नभः सशब्दं महता सहैव
कुर्वंतु ० ॥ ५ ॥ इत्थं प्रभाते परमं पवित्रं पठेत्स्मरेद्वा शृणुयाच्च तद्वत्
दुःस्वप्न नाशस्त्विह सुप्रभातं भवेच्च नित्यं भगवत्प्रसादात्।
पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः। पुण्यश्लोको विदेहश्च पुण्य
श्लोको जनार्दनः ॥ १ ॥ अश्वत्थामा बलिर्व्यासो हनुमांश्च बिभीषणः।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ २ ॥ सप्तैतान्संस्मरेन्नित्यं
मार्कंडेयं तथाष्टमं। जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ॥ ३ ॥
अहल्या द्रौपदी सीता तारा मंदोदरी तथा। पंचकन्ना स्मरेन्नित्यं महा
पातकनाशनं ॥ ४ ॥ इति प्रातःस्मरणं ॥

॥ श्रीरामसमर्थ ॥

अथ भारत सावित्री ॥ महर्षिर्भगवान्व्यासः कृत्वेमां संहितां पुरा । श्लोकैश्चतुर्भि
र्धर्मात्मा पुत्रमध्यापयच्छुकम् ॥ १ ॥ मातापितृसहस्राणि पुत्रदारशतानिच ।
संसारेष्वनुभूतानि यांति यास्यंति चापरे ॥ २ ॥ हर्षस्थानसहस्राणि भयस्थान
शतानिच । दिवसे दिवसे मूढमाविशंति न पंडितम् ॥ ३ ॥ ऊर्ध्वबाहुर्विरौम्येष --
नच कश्चिच्छृणोति मे । धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥ ४ ॥
न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः । धर्मो नित्यः
सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः ॥ ५ ॥ इमां भारत सावित्रीं
प्रातरुत्थाय यः पठेत् । स भारत फलं प्राप्य परंब्रम्हाधिगच्छति ॥ ६ ॥
॥ इति भारत सावित्री ॥ ॥ श्रीराम जयराम जयजयराम ॥ प्रातः स्मरामि
रघुनाथमुखारविंदं मंदस्मितं मधुरभाषि विशालभालम् ॥ कर्णावलंबि-
-चलकुंडलशोभिगंडं कर्णांतदीर्घनयनं नयनाभिरामम् ॥ १ ॥ प्रातर्भजामि
रघुनाथकरारविंदं रक्षोगणाय भयदं वरदं निजेभ्यः । यद्राजसंसदि वि-
-भज्य महेशचापं सीताकरग्रहण मंगलमाप सद्यः ॥ २ ॥ प्रातर्नमामि -
रघुनाथपदारविंदं पद्मांकुशादि शुभरेखि शुभावहं मे । योगींद्रमानसमधु
-व्रतसेव्यमानं शापापहं सपदि गौतमधर्मपत्न्याः ॥ ३ ॥ प्रातर्वदामि --
वचसा रघुनाथनाम वाग्दोषहारि सकलं शमलं निहंतृ । यत्पार्वती स्व-
-पतिना सह मोक्षकामा प्रीत्या सहस्र हरिनाम समं जजाप ॥ ४ ॥ प्रातः श्रये
श्रुतिनुतां रघुनाथमूर्तिं नीलांबुदोत्पलसितेतररत्ननीलां ॥ आमुक्त --
मौक्तिकविशेषविभूषणाढ्यां ध्येयां समस्तमुनिभिर्निजमुक्तिहेतुम् ॥ ५ ॥
यः श्लोकपंचकमिदं प्रयतः पठेत नित्यं प्रभातसमये पुरुषः प्रबुद्धः ॥
श्रीरामकिंकरजनेषु स एव मुख्यो भूत्वा प्रयाति हरिलोकमनन्यलभ्यम् ॥ ६ ॥